


## संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.


# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -6

Br. Demian 2000

## WHY PROGATION OF SAMSKRIT AND HOW ?

### Widening the base of Samskrit Students

The Correspondence course conducted by Samskrita Bharathi is organised by the Delhi Centre. Studying and practising the course material well will certainly lead to fluency in speaking and thus we could all participate in reviving the world's most ancient language. It is not enough for each of us to gain proficiency in Samskrit, it is also important to motivate others.

If we can be instrumental in friends, neighbours and relatives enrolling in the correspondence course, we can help them see for themsleves the beauty of Samskrit. Thus we would be sending great service to our true Mother tongue.

### Supporting institutions active in spreading Samskrit

All over India there are many Institutions working in the field of Samskrit. They all have the same aim - to revive the ancient laungauge and make it popular among the common people.

In bygone ages, Samskrit was the common language that everybody understood and conversed in.

But over time, the notion that Samskrit was only for the learned elite and beyond the grasp of the common man, become widespread. We must dispell this view and show that indeed everybody can learn and use Samskrit. Working towards this goal, it is our duty to help these institutions in whatever way we can, with time, effort and money.

*NOTE:*
**The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.**



ॐ

जयतु संस्कृतम् - जयतु मनुकुलम्

*Victory of Samskrutam - Victory of mankind*

# संस्कृतभारती

**Samskrita Bhāratī**

पत्रालयद्वारा संस्कृतम्

**Samskrit Through Correspondence**

'Aksharam' 8th cross, Girinagar II Phase,
Bangalore-560 085. Ph.: 6721052

## परिचयः - PARICHAYA

**षष्ठः पाठः - SIXTH LESSON**

॥ गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥

Practise Dharma as if (you are) held by hair by death.

### १.विभक्तिपरिचयः

**षष्ठीविभक्तिः - Genitive Case**

This case gives the meaning of 'OF'. - (रामस्य- of Rama)

| | पुंलिङ्गः | स्त्रीलिङ्गः | नपुंसकलिङ्गः |
|---|---|---|---|
| अकारान्तः- | रामस्य-रामाणाम् | - - - | ज्ञानस्य-ज्ञानानाम् |
| आकारान्तः- | - - - | रमायाः-रमाणाम् | - - - |
| इकारान्तः- | हरेः-हरीणाम् | मत्याः / मतेः } -मतीनाम् | दध्नः-दध्नाम् |
| ईकारान्तः- | - - - | नद्याः-नदीनाम् | - - - |
| उकारान्तः- | गुरोः-गुरूणाम् | धेनोः-धेनूनाम् | मधुनः-मधूनाम् |

सर्वनाम 'अस्मत्'शब्दः- मम-अस्माकम्

,, 'युष्मत्'शब्दः- तव-युष्माकम्

**Sentences with words in the Genitive Case.**

१. सूर्यस्य उदयः ।

२. नद्याः जलम् ।

३. तरोः[a] पर्णानि ।

४. गुरोः पुत्रः ।

५. बुद्धेः नैपुण्यम् ।

६. चन्द्रिकायाः धवलता[b] ।

७. अग्नेः ज्वाला ।

८. अतिथेः आगमनम् ।

९. नारीणाम्[c] आभरणम् ।

१०. बन्धूनां गृहाणि ।

११. रवेः उदयं पश्यन्ति ।

१२. देवानां गुरुः बृहस्पतिः ।

१३. शुक्राचार्यस्य शिष्याः असुराः ।

१४. वाप्याः[d] जलं शीतलम् ।

१५. उष्णोदकस्य पानं कर्तव्यम् ।

१६. पाण्डोः पुत्रः धर्मराजः ।

१७. कुन्त्याः पुत्रः कर्णः ।

१८. गिरीणां शिखराणि रम्याणि ।

१९. कवेः पद्यानि रमणीयानि ।

२०. अभिमन्योः पौत्रः[e] जनमेजयः ।

२१. पार्वत्याः पुत्रः गणपतिः ।

२२. गणपतेः चत्वारः[f] हस्ताः ।

२३. पाण्डवानां धर्मराजः ज्येष्ठः ।

२४. छात्राणां बालिकाः बुद्धिमत्यः[g] ।

२५. वृक्षाणां नालिकेरः[h] श्रेष्ठः ।

---

a. Tree, b. Whiteness, c. Ladies, d. Well, e. Grand Son, f. Four, g. Clever, h. Coconut tree.





**Some rules pertaining to the genitive case :**

1. Whose? Of Which? Answers to these are in the form of 'of him', 'of it', 'of them', etc. These answers will be in the Genitive case.

   Eg. पुत्रः - son कस्य - (whose son) - गुरोः ।

2. When, 'among these' 'in these' are meant the Genitive comes. Eg. Dharmaraja was the eldest among the Pandavas. (पाण्डवानाम्)

## प्रश्नाः

(अ) १. कस्य पर्णानि ? ४. कस्य पौत्रः जनमेजयः ?

२. कस्य पुत्रः ? ५. केषां कः ज्येष्ठः ?

३. कासाम् आभरणानि ? ६. कस्य आगमनम् ?

(आ) Convert the following words into Genitive Case and use them in your sentences:

Eg. : वाल्मीकिः । वाल्मीकेः रामायणं सुन्दरम् ।

१. नृपः २. कालिदासः ३. भारतदेशः ४. गौरी ५. रविः ६. शकुन्तला ७. जानकी ८. तरुः ९. शम्भुः १०. चन्द्रिका ।

**Translate the following into Samskrit:**

1. The water of the ocean is saline.
2. Rama's younger brother is Lakshmana.
3. Fame of the country.
4. The peaks of the Himalaya.
5. Fruits of the tree.
6. The water of the Ganges is sacred.
7. The playground of the school.

8. Krishna is wise[1] among boys.
9. Children's book.
10. Skillfulness of thieves.[2]

## २. चाटुश्लोकः

The power of Rama's name is great. The utterance of Rama's name brings merit. Taking the name of Rama in any way leads to liberation. This is the substance of the following stanza:

वने चरामो वसु चाहरामः
नदीस्तरामो न भयं स्मरामः ।
इतीरयन्तोऽपि वने किराताः
मुक्तिं गता रामपदानुषङ्गात् ॥

We wander (चरामः) in the forest. We bring (आहरामः) wealth. We cross the rivers. (तरामः) We do not remember (न स्मरामः) any fear. The hunters saying this got liberated because of pronouncing the word Rama (रामः)

(इति ईरयन्तः - thus prattling.)

## ३. समस्या

When sentences give contradictory meanings, they can be re-composed so as to become mutually compatible. This attempt is known as 'samasya poorana'.

There is a Samasya like this 'हुताशनश्चन्दनपङ्कशीतलः (The fire is as cool as the sandal paste). Here we find a naturally incompatible sense. To remove this incompatibility, the following stanza attempts a "Samasya poorana".

1. चतुरः, 2. चोराणाम्





सुतं पतन्तं समवेक्ष्य पावके
न बोधयामास पतिं पतिव्रता ।
तदाभवत् तत्पतिभक्तिगौरवात्
हुताशनश्चन्दनपङ्कशीतलः ॥

A certain householder was sleeping with his head resting on the thigh of his wife. Their child which was playing there, was about to fall into fire. Fearing that her husband would be disturbed in his sleep, the devoted wife did not move even a bit. On account of the greatness of her devotion towards the husband, the fire turned cool like the sandal paste.

## ४. सुभाषितम्

यदा किञ्चिज्ज्ञोऽहं गज इव मदान्धः समभवम्
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित् किञ्चित् बुधजनसकाशादवगतम्
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥

पदविभागः-

यदा, किञ्चिज्ज्ञः, अहम्, गजः, इव, मदान्धः, समभवम्, तदा, सर्वज्ञः, अस्मि, इति, अभवत्, अवलिप्तम्, मम, मनः, यदा, किञ्चित्, किञ्चित्, बुधजनसकाशात्, अवगतम्, तदा, मूर्खः, अस्मि, इति, ज्वरः, इव, मदः, मे, व्यपगतः ।

तात्पर्यम् -

Knowing a little, I got blind with pride like an elephant. Then I got proud thinking myself omniscient. When I learnt bit by bit from the learned and realised that I am ignorant, the pride subsided like fever.

(अवलिप्तम् - proud; व्यपगतः - subsided.)

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

पदविभागः -

विपदि, धैर्यम्, अथ, अभ्युदये, क्षमा, सदसि, वाक्पटुता, युधि, विक्रमः, यशसि, च, अभिरुचिः, व्यसनम्, श्रुतौ, प्रकृतिसिद्धम्, इदम्, हि, महात्मनाम् ।

तात्पर्यम् -

"Courage in adversity, patience in prosperity, oratory in assembly, bravery in battle, full of interest in fame, attachment to knowledge, all these are naturally found in the great persons."

## ५. पदसङ्ग्रहः

पृच्छ - To ask

१. पृच्छति, २. पृच्छ्यते, ३. प्रक्ष्यति

४. प्रष्टव्यम्-प्रच्छनीयम्, ५. पृष्टः-पृष्टा-पृष्टम्, ६. पृष्टवान्-पृष्टवती,

७. पृच्छन्-पृच्छन्ती-पृच्छती, ८. पृष्ट्वा-आपृच्छ्य, ९. प्रष्टुम् ।

प्रेष् - To send

१. प्रेषयति, २. प्रेष्यते, ३. प्रेषयिष्यति

४. प्रेषयितव्यम्-प्रेषणीयम्, ५. प्रेषितः-प्रेषिता-प्रेषितम्, ६. प्रेषितवान्, प्रेषितवती, ७. प्रेषयन्, प्रेषयन्ती, ८. प्रेषयित्वा, सम्प्रेष्य, ९. प्रेषयितुम् ।

कृ - To do

१. करोति, २. क्रियते, ३. करिष्यति

४. कर्तव्यम्-करणीयम्, ५. कृतः-कृता-कृतम्, ६. कृतवान्-कृतवती,

७. कुर्वन्-कुर्वती, ८. कृत्वा-संस्कृत्य, ९. कर्तुम् ।





श्रु - To hear

१. शृणोति, २. श्रूयते, ३. श्रोष्यति

४. श्रोतव्यम्-श्रवणीयम्, ५. श्रुतः-श्रुता-श्रुतम्, ६. श्रुतवान्-श्रुतवती,

७. शृण्वन्-शृण्वती, ८. श्रुत्वा-प्रतिश्रुत्य, ९. श्रोतुम् ।

ज्ञा - To know

१. जानाति, २. ज्ञायते, ३. ज्ञास्यति

४. ज्ञातव्यम्-ज्ञानीयम्, ५. ज्ञातः-ज्ञाता-ज्ञातम्, ६. ज्ञातवान्-ज्ञातवती,

७. जानन्-जानती, ८. ज्ञात्वा-प्रतिज्ञाय, ९. ज्ञातुम् ।

Make use of the krudantas and form as many sentences as possible.

## ६. काव्यकथा

### अजमहाराजः

कौत्सस्य आशीर्वादेन रघोः पुत्रः उत्पन्नः । सः एव अजः । अजः रूपेण गुणेन च रघुसदृशः । अजः प्रवृद्धः । सर्वाः विद्याः अधीतवान् । तरुणः विद्याविनयसम्पन्नः अभवत् ।

विदर्भदेशस्य नृपः भोजः । भोजस्य अनुजा इन्दुमती । तस्याः स्वयंवरकार्यक्रमः निश्चितः । भोजः रघुमहाराजाय आमन्त्रणं प्रेषितवान् । ततः अजः स्वयंवरार्थं विदर्भदेशं गतवान् । स्वयंवरार्थं मगधेश्वरः, अङ्गराजः, अवन्तिनाथः, कार्तवीर्यार्जुनः, अन्ये च नृपाः आगताः । किन्तु इन्दुमती सर्वगुणसम्पन्नम् अजमहाराजम् एव वृतवती । विवाहः सम्पूर्णः । अजः स्वनगरं प्रति प्रस्थितवान् । मध्ये अन्ये नृपाः अनेन सह युद्धं कृतवन्तः । युद्धे नृपाः पराजिताः । अजः विजितः । सः अयोध्यां प्रत्यागतवान् । रघुः अजम् अभिनन्दितवान् । ततः रघुः अजं सिंहासने प्रतिष्ठापितवान् ।

अजः प्रजाः पुत्रान् इव अरक्षत् । ततः रघुः वानप्रस्थाश्रमं स्वीकृतवान् । योगमार्गेण भगवन्तं द्रष्टुं सङ्कल्पितवान् । कालः अतीतः । रघुः मोक्षं प्राप्तवान् । अजस्य इन्दुमत्याः च पुत्रः जातः । सः दशरथः ।

अजः कदाचित् इन्दुमत्या सह उद्यानं गतवान् । तदा एकः पुष्पहारः इन्दुमत्याः उपरि पतितः । तदा इन्दुमती मृता । पुरा एकः शापः आसीत् । अत एव सा मृता । इन्दुमत्याः विरहेण अजः दुःखतप्तः जातः । आचार्यः वसिष्ठः समाधानवचनानि उक्तवान् । तथापि तस्य दुःखं न शान्तम् । अजः दुःखपीडितः एव राज्यं रक्षितवान् । अन्ते विरहदुःखेनैव गङ्गायाः सङ्गमे देहत्यागं कृतवान् । ततः दशरथः राजा अभवत् ।

## AJA, THE GREAT KING

By Kautsa's blessings, a son was born to Raghu. He was Aja. He was like Raghu in form and merits. Aja grew up. He learnt all lores. He became a youth endowed with learning and modesty.

The king of Vidarbha kingdom was Bhoja. Bhoja's sister was Indumathi. She was beautiful. The ceremony of her choosing the husband was fixed. Bhoja sent invitation for king Raghu. Then Aja went to Vidarbha kingdom for the Swayamvara. The kings of Magadha, Anga and Avanti and Kartaviryarjuna and many other kings came for the Swayamvara. But Indumathi chose king Aja who was a repository of all merits. The marriage was over. Aja started for his city. On the way the kings made war against Aja. They were defeated in the war. Aja won. He returned to Ayodhya. Raghu congratulated Aja. Later Raghu coronated Aja.

Aja protected his subjects like his children. Then Raghu





undertook the Vanaprastha ashrama. He decided to realise God through Yoga. Time passed. Raghu attained liberation. Aja too got son. He was Dasharatha.

Once Aja went to the garden with Indumathi. A garland fell on Indumathi and she died. There was a curse on her. Because of that curse she died. By the separation of Indumathi Aja was afflicted very much. Priest Vasista said some words of condolence. Even then his grief was not subsided. Despite being oppressed by sorrow Aja protected (ruled) the kingdom. At last with this grief of separation only, he resigned the body in the meeting place of Ganga (and Yamuna). Then Dasharatha became the King.

## ७. अन्वयक्रमः

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ १० ॥**

**पदविभागः -**

इति, विज्ञापितः, राज्ञा, ध्यानस्तिमितलोचनः, क्षणमात्रम्, ऋषिः, तस्थौ, सुप्तमीनः, इव, ह्रदः ।

**अन्वयः -**

इति, राज्ञा, विज्ञापितः, ऋषिः, ध्यानस्तिमितलोचनः (सन्), क्षणमात्रम्, सुप्तमीनः, ह्रदः, इव, तस्थौ ।

**अन्वयार्थः -**

इति - Thus, राज्ञा - by the king Dilipa, विज्ञापितः - respectfully requested, ऋषिः - the sage Vasista, ध्यानस्तिमितलोचनः - having

closed his eyes in meditation, क्षणमात्रम् - for a second, सुप्तमीनः ह्रदः इव - like a pond with fish asleep, तस्थौ - sat.

### तात्पर्यम् -

Dilipa humbly informed the sage Vasishta that he is without an offspring. Having learnt it, the sage went into meditation with half-closed eyes. It is but natural that the eyes will be closed off during meditation state. Here the poet makes use of a simile of the fish that is asleep in a pond. The pond is full of water. But the water of the pond is standing still because the fish there in are asleep. Similarly, the eyes of the sage are steady. And, like the deep water of the pond the body of the sage is motionless. The sublimity that is filling the air can very well be imagined thereof.

**सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम् ।**
**भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ११ ॥**

### पदविभागः -

सः, अपश्यत्, प्रणिधानेन, सन्ततेः, स्तम्भकारणम्, भावितात्मा, भुवः, भर्तुः अथ, एनम्, प्रत्यबोधयत् ।

### अन्वयः -

सः, प्रणिधानेन, भावितात्मा, भुवः, भर्तुः, सन्ततेः, स्तम्भकारणम्, अपश्यत्, अथ, एनं, प्रत्यबोधयत् ।

### अन्वयार्थः -

सः - That Vasistha, प्रणिधानेन - through contemplation, भावितात्मा - possessed of pure mind, भुवः - of the earth, भर्तुः - of the lord Dilipa, सन्ततेः - in respect of progeny, स्तम्भकारणम् - the





cause of hindrance, अपश्यत् - knew (saw). अथ - Afterwards, एनं - (addressing) the king, प्रत्यबोधयत् - instructed.

### तात्पर्यम् -

The sage entering into deep meditative mood came to know of the cause which was obstructing Dilipa from begetting a child. Then, the sage began to duly instruct the king about the means of obtaining child.

## ८. अनुवादपद्धतिः

Translation does not consist in merely putting a few sentences in one language from the other. Virtually the translation will be taking place in our minds when we are writing independently. When we are speaking or writing we will be thinking in our mother-tongue and translating first in the mind. It is but essential and proper that we resort to simple language in translation to begin with.

In Samskrit (translation) verbs pose some difficulty in using them. Since our vocabulary of verbs is not enough it is natural that we feel the difficulty. In such situations it is better we split the verbs.

उदा -

| | | |
|---|---|---|
| अधीते | - | अध्ययनं करोति । |
| निद्राति | - | निद्रां करोति । |
| विक्रीणीते | - | विक्रयणं करोति । |
| भुङ्क्ते | - | भोजनं करोति । |
| छिनत्ति | - | छेदनं करोति । |

By using अध्ययनं करोति instead of अधीते the same idea can easily be conveyed. Although all verbs can thus be split, the simple verbs need not be split. Where the direct use of the verbs is found difficult and a little complicated, there the splitting is admissible.

However, one should be careful in doing so because the object/subject gets accusative case when the actual or direct verb is used, gets possessive case when split up. Observe the following examples-

| | |
|---|---|
| पुस्तकम् अधीते । (reads) | पुस्तकस्य अध्ययनं करोति । |
| लेखनीं विक्रीणीते । (sells) | लेखन्याः विक्रयणं करोति । |
| वृक्षं छिनत्ति । (cuts) | वृक्षस्य छेदनं करोति । |
| हस्तम् उपयुङ्क्ते । (uses) | हस्तस्य उपयोगं करोति । |
| द्वारं पिधत्ते । (covers) | द्वारस्य पिधानं करोति । |

In cases like निद्रां करोति, प्रयत्नं करोति etc. since the verb is intransitive and does not take the object, the question of change in case-ending does not arise.

**(अ) Translate the following sentences into English.**

१. बालकः अङ्गुल्या गणनां करोति ।

२. सा वस्त्रप्रक्षालनं करोति ।

३. शिशुः सर्वदा निद्रां करोति ।

४. निर्धनाः अल्यूमिनियं-पात्रस्य उपयोगं कुर्वन्ति ।

५. विमर्शकः काव्यस्य परिशीलनं करोति ।

(अङ्गुल्या - with the finger निर्धनाः - poor)





**(आ)Translate the following sentences into Samskrit.**

1. I translate sentences.
2. Student answers the questions.
3. When does the programme begin?
4. Minister delivers speech.
5. Let us practice Samskrit.

(Minister - मन्त्री, Let us do - करवाम)

## ९. सङ्ग्राह्यविषयाः

Certain groups which are known to have seven.

1. The seven sages - (सप्तर्षयः)
   मरीचिः, अत्रिः, आङ्गिरसः, पौलस्त्यः, पुलहः, क्रतुः, वसिष्ठः ।
2. Seven oceans - (सप्त समुद्राः)
   क्षारम्, क्षीरम्, दधि, मधु, सुरा, इक्षुः, शुद्धोदकम् ।
3. Seven Kulaparvatas - (सप्त कुलपर्वताः)
   महेन्द्रः, मलयः, सह्यः, शक्तिमान्, ऋक्षवान्, विन्ध्यः, पारियात्रः ।
4. Seven Prakrutis - (सप्त प्रकृतयः)
   राजा, मन्त्री, सुहृत्, कोशः, राष्ट्रम्, दुर्गम्, सेना ।



ॐ

# संस्कृतभारती

पत्रालयद्वारा संस्कृतम्

## परिचयः

## षष्ठः पाठः

## प्रश्नाः

I. Translate the following into Samskrit:

1. Govinda having taken the books, went to the school.
2. I write on the book with my pencil.
3. You will come tomorrow from Lakshmana Pura.
4. Radha is near the bank of the river Yamuna.
5. Do you come to listen to his instruction?

II. Write the Anvayartha and tatparya of the following stanza.

लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥

(प्रभवति-प्रजायते-Originates, arises, gives rise to, is born.)

## Treasure of Knowledge in Ancient India

*(Continued from previous lesson)*

The four Yugas, Sat, Treta, Dvapara and Kali span 12,000 years of the gods. Sat spans four, Treta spans three, Dvapara two and Kali one thousand years of the gods. The Sandhya and Sandhymsa together of each span eight, six, two and one hundred years respectively. The beginning of the Yuga is called Sandhya and the end of each, Sandhyamsa.

Sathya Yuga has 4000 divine years and its Sandhya and Sandhyamsa span 800 devine years, totalling 4,800. Similarly Treta spans 3600 divine years, Dvapara, 2400 and Kali, 1200. One year of mankind equals a day of the gods. So one devine year equals 360 years. By human yardstick, there are 432000 years in Kaliyuga, twice as many in Dvapara, three times in Treta and four times in Satyayuga.

One thousand cycles of all four yugas is a day by Brahma's standards and each night is as long. This is when Brahma rests. A day and night for Brahma is called a kalpa in this world. 14 Manus are created in each Kalpa, each of whom presides over the world for a little over 71 cycles of the four yugas.

By calculating a day of Brahma in this way, the lifespan of Brahma is 100 years, half of which is called a Parardha. At present, half a parardha is over and the latter half has begun. The duration of two Parardhas is considered a निमेष in the timescale of the absolute, Vishwatma Sri Hari.

Among modern scientists, Carl Sagan has taken pains to show that the Indian civilization is the only one in the world to have understood the cosmic time scale.

